विजयप्रबन्धः

**यत्र तेनैः स्वरैः पाटैः पदैर्विजयतालतः ।**
**गीयते विजयस्तेनैर्न्यासः स विजयो मतः ॥ २७७ ॥**

इति विजयप्रबन्धः ।

त्रिपथप्रबन्धः

**पादत्रयं त्रिपथके पाटैश्च बिरुदैः स्वरैः ।**

इति त्रिपथप्रबन्धः ।

(सं०) वस्तु लक्षयति—**मात्रा** इति । प्रथमतृतीयपञ्चमपादेषु **पञ्चदश मात्राः** । द्वितीयतुरीययोः सूर्याः द्वादश मात्राः । प्रथमार्धेऽन्ते स्वराः पाटाः । द्वितीयार्धस्यान्ते स्वरास्तेनकाः । तदनन्तरं पूर्वलक्षितो दोहकः । तेनकेषु समाप्तिः । तत् वस्तु ॥ २७५, २७६ ॥

**(क०)** अथ विजयं लक्षयति—**यत्रेति** । अत्र तेनादीनां पाठक्रमस्य विवक्षितत्वात्तथैव प्रयोक्तव्याः । **विजयतालत** इति । 'विजयः प्लुतो लघुः' इति तस्य लक्षणं वक्ष्यते । अत्र तेनैः स्वरैरुद्ग्राहः कर्तव्यः । पाटैः पदैर्ध्रुवः कर्तव्यः । पदान्तरैराभोगः कल्पनीयः । तेनायं त्रिधातुः । तालनियमान्निर्युक्तः । बिरुदाभावात् पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २७७ ॥

(सं०) विजयं लक्षयति—यत्रेति । यत्र राज्ञां विजयो गीयते तेनैः स्वरैः पाटैः पदैर्विजयतालेन, तेनकेषु समाप्तिः, स विजयः ॥ २७७ ॥

**(क०)** अथ त्रिपथं लक्षयति—**पादत्रयमित्यादि** । पाटैरेकः पादः । बिरुदैर्द्वितीयः । स्वरैस्तृतीयः । तत्र प्रथमं पादद्वयमुद्ग्राहः । तृतीयः पादो ध्रुवः । पदैराभोगः कल्पनीयः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । तेनकाभावात् पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २७८ ॥

चतुर्मुखप्रबन्धः

**स्वरैः पाटैः पदैस्तेनैर्वर्णैः स्थाय्यादिभिः क्रमात् ॥ २७८ ॥**
**चत्वारश्चरणा गेया ग्रहे न्यासश्चतुर्मुखे ।**

इति चतुर्मुखप्रबन्धः ।

सिंहलीलप्रबन्धः

**स्वरैः पाटैश्च बिरुदैस्तेनकैर्यो विरच्यते ॥ २७९ ॥**
**सिंहलीलेन तालेन सिंहलीलः स उच्यते ।**

इति सिंहलीलप्रबन्धः ।

(सं०) त्रिपथं लक्षयति—पादत्रयमिति । यत्र पाटैर्बिरुदैः स्वरत्रयेण पादा गीयन्ते, स त्रिपथः ॥ २७८ ॥

**(क०)** अथ चतुर्मुखं लक्षयति **स्वरैरित्यादि** । **स्थाय्यादिभिः क्रमादिति** । स्थायिवर्णेन स्वरैः प्रथमः पादः, आरोहिवर्णेन पाटैर्द्वितीयः, अवरोहिवर्णेन पदैस्तृतीयः, संचारिवर्णेन तेनैश्चतुर्थ इति क्रमो द्रष्टव्यः । **ग्रहे** उद्ग्राहे **न्यासः** कर्तव्यः । अत्र प्रथमं पादद्वयमुद्ग्राहः । द्वितीयं पादद्वयं ध्रुवः । पदान्तरैराभोगः कर्तव्यः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । बिरुदाभावात् पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २७८, २७९ ॥

(सं०) चतुर्मुखं लक्षयति—स्वरैरिति । स्थायिनि वर्णे स्वरैरेकः पादः । आरोहिणि वर्णे पाटैर्द्वितीयः । अवरोहिणि वर्णे पदैस्तृतीयः । संचारिणि वर्णे तेनैश्चतुर्थः । ग्रहे समाप्तिः । स चतुर्मुखः ॥ २७८, २७९ ॥

**(क०)** अथ सिंहलीलं लक्षयति—**स्वरैरित्यादि** । **सिंहलीलेन तालेनेति** । "[1]तालाद्यन्तं दत्रयं सिंहलीलः" इति तस्य लक्षणं वक्ष्यते । अत्र

[1] तालाध्याये तु 'लघ्वन्ते' इति पठ्यते ।

हंसलीलप्रबन्धः

**स्वनामतालके हंसलीलेऽङ्घ्री पदपाटकैः ॥ २८० ॥**

इति हंसलीलप्रबन्धः ।

दण्डकप्रबन्धः

**पदैः स्वरैर्दण्डकेन छन्दसा दण्डको मतः ।**

स्वरैः पाटैरुद्ग्राहः । बिरुदैस्तेनकैश्च ध्रुवः । पदैराभोगः कर्तव्यः । तेनायं त्रिधातुः । तालनियमान्निर्युक्तः । स्वरादिषडङ्गबद्धत्वान्मेदिनीजातिमान् ॥ २७९, २८० ॥

(सं०) सिंहलीलं लक्षयति--स्वरैरिति । वक्ष्यमाणेन सिंहलीलेन तालेन स्वरपाटादिभिर्यो विरचितः स सिंहलीलः ॥ २७९, २८० ॥

(क०) अथ हंसलीलं लक्षयति—**स्वनामे**त्यादि । **स्वनामतालक** इति । हंसलीलतालयुक्त इत्यर्थः । 'हंसलीलो यगणश्च लघुर्गुरुः' इति तस्य लक्षणं वक्ष्यते[1] । **पदपाटकैरङ्घ्री** इति । पदैरेकः पादः । पाटैर्द्वितीयः । अत्र पदैरुद्ग्राहः । पाटैर्ध्रुवः । पदान्तरैराभोगः । तेनायं त्रिधातुः । तालनियमात् निर्युक्तः । पदपाटतालबद्धत्वात् त्र्यङ्गः । भावनीजातिमान् ॥ २८० ॥

(सं०) हंसलीलमाह—**स्वनामे**ति । हंसलीलेन तालेन पदैरेकोऽङ्घ्रिः, पाटैर्द्वितीयो यस्मिन् विरच्यते, स हंसलीलः ॥ २८० ॥

(क०) अथ दण्डकं लक्षयति—**पदै**रिति । **दण्डकेन छन्दसेति** । "दण्डको नौ रः" इति तस्य लक्षणम् । अस्यार्थः—यस्य पादे द्वौ नकारौ, रेफाश्च सप्त भवन्ति, तस्य दण्डक इति नाम भवति । षड्विंशत्यक्षराया उत्कृतेः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरत्वमेव युक्तम् । सर्वेषां

[1] तालाध्याये तु 'हंसलीले विरामान्तं लघुद्वयमुदाहृतम्' इति लक्षणवाक्यं दृश्यते ।

**तस्य भूरितरा भेदाश्छन्दोलक्ष्मणि भाषिताः ॥ २८१ ॥**

इति दण्डकप्रबन्धः ।

झम्पटप्रबन्धः

**झम्पटच्छन्दसा गेयः क्रीडातालेन झम्पटः ।**

इति झम्पटप्रबन्धः ।

छन्दसामेकैकाक्षरवृद्ध्या प्रस्तारः प्रवृत्तः । इत ऊर्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः कर्तव्यः ; 'दण्डको नौ रः' इति श्रवणात् । तस्योदाहरणं तु—

"इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनीनां मनोहारिणि
त्रिदशविजयवीर्यदृप्यद्दशग्रीवलक्ष्मीविरामेण रामेण संसेविते ।
जनकयजनभूमिसंभूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे
भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले ॥"

इति । अत्र पादान्ते यतिः । **तस्ये**त्यादि । तस्य दण्डकस्य । **भूरितरा भेदा** इति । चण्डवृष्टिप्रपातप्रचितादयः । **छन्दोलक्ष्मणि** छन्दःशास्त्रे **भाषिता** उक्ताः ; ततोऽवगन्तव्याः । तत्र पदैर्निर्मितं दण्डकस्य पूर्वार्धमुद्ग्राहः । स्वरैः निर्मितमुत्तरार्धं ध्रुवः । पदान्तरैराभोगः । तेनायं त्रिधातुः । छन्दोनियमान्निर्युक्तः । स्वरपदतालबद्धत्वात् त्र्यङ्गः । भावनीजातिमान् ॥ २८१ ॥

(सं०) दण्डकं लक्षयति—**पदै**रिति । दण्डकनाम्ना छन्दसा पदैः स्वरैश्च दण्डकः कर्तव्यः । दण्डकनाम छन्दः छन्दःशास्त्रप्रसिद्धम् । चण्डवृष्टिप्रभृतयः तस्य दण्डकस्य **भूरितरा भेदाः** बहवो भेदाः छन्दःशास्त्रे ज्ञातव्याः ॥ २८१ ॥

(क०) अत्र झम्पटं लक्षयति—**झम्पटच्छन्द**सेति । "झम्पटं त्रिपदैः प्राहुः" इति तस्य लक्षणं गाथाभेदेषु द्रष्टव्यम् । **क्रीडातालेने**ति । 'क्रीडा

कन्दुकप्रबन्धः

**पदैः पाटैश्च बिरुदैः कन्दुकः परिगीयते ॥ २८२ ॥**

इति कन्दुकप्रबन्धः ।

त्रिभङ्गिप्रबन्धः

**स्वरैः पाटैः पदैरुक्तस्त्रिभङ्गिः स च पञ्चधा ।**
**एकस्त्रिभङ्गितालेन वृत्तेनान्यस्त्रिभङ्गिना ॥ २८३ ॥**

द्रुतौ विरामान्तौ' इति तस्य लक्षणं वक्ष्यते । तत्राद्यं पादद्वयमुद्ग्राहः । तृतीयः पादो ध्रुवः । पूर्ववदाभोगः कर्तव्यः । तेनायं त्रिधातुः । छन्दस्तालनिबद्धत्वात् निर्युक्त एव । पदतालबद्धत्वात् द्व्यङ्गः । तारावलीजातिमान् ॥ २८२ ॥

(सं०) झम्पटं लक्षयति—झम्पटेति । झम्पटः छन्दःशास्त्रे प्रसिद्धः । तेन छन्दसा क्रीडातालेन यत् गीयते, तत् झम्पटम् ॥ २८२ ॥

(क०) अथ कन्दुकं लक्षयति—**पदै**रित्यादि । अयमपि गाथाभेदो द्रष्टव्यः । अत्र पदैः प्रथमः पादः । पाटैर्द्वितीयः । बिरुदैस्तृतीयः । उद्ग्राहादिविभागः पूर्ववत् । तालाद्यनियमादनिर्युक्त एव । स्वरतेनकाभावाच्चतुरङ्गः । दीपनीजातिमान् । सिंहलीलादिषु पञ्चसूद्ग्राहे न्यासः कर्तव्यः । एवमनुक्तन्यासस्थानेषु सर्वत्र न्यायोऽनुसंधेयः ॥ २८२ ॥

(सं०) कन्दुकं लक्षयति—**पदै**रिति । पदैः पाटैर्बिरुदैस्त्रिभिरङ्गैर्निर्मितः कन्दुकप्रबन्धः ॥ २८२ ॥

(क०) त्रिभङ्गिं लक्षयति—**स्वरैः पाटै**रित्यादि । **त्रिभङ्गितालेनेति** । 'त्रिभङ्गिः सगणाद् गुरुः' इति तस्य लक्षणं वक्ष्यते । **वृत्तेनेति** । त्रिभङ्गिवृत्तमपि गाथाभेदो द्रष्टव्यः । स्पष्टार्थमन्यत् । पञ्चसु त्रिभङ्गिपदेष्वपि

**तालै रागैस्त्रिभिर्यद्वा यद्वा वृत्तत्रयान्वितः ।**
**यद्वा देवत्रयस्तुत्या तालद्वैगुण्यमुक्तकः ॥ २८४ ॥**

इति त्रिभङ्गिप्रबन्धः ।

हरविलासप्रबन्धः

**पदैः सबिरुदैः पाटैस्तेनैर्हरविलासकः ।**

इति हरविलासप्रबन्धः ।

सुदर्शनप्रबन्धः

**पदैश्च बिरुदैस्तेनैर्निर्दिशन्ति सुदर्शनम् ॥ २८५ ॥**

इति सुदर्शनप्रबन्धः ।

सामान्यलक्षणोक्तः स्वरपाटपदानां प्रयोगः क्रमेण कर्तव्यः । उद्ग्राहादिविभागोऽपि भेदेषु यथायोगमुन्नेयः । अन्यपदैराभोगः । तेनायं त्रिधातुः । क्वचिच्छन्दस्तालादिनियमान्निर्युक्तः । अन्यत्र तदभावादनिर्युक्तः । बिरुदतेनकाभावाच्चतुरङ्गः । दीपनीजातिमान् ॥ २८३, २८४ ॥

(सं०) त्रिभङ्गिं लक्षयति—पदैरिति । पदैः पाटैः स्वरैश्च त्रिभङ्गिर्गीयते । स पञ्चप्रकारः—कश्चित् त्रिभङ्गिनाम्ना वक्ष्यमाणेन तालेन गीयते ; कश्चित् त्रिभङ्गिनाम्ना छन्दसा ; कश्चित् त्रिभिस्तालै रागैश्च ; कश्चित् त्रिभिश्छन्दोभिः । कश्चित् त्रयाणां देवानां स्तुत्या युक्त इति पञ्चविधस्त्रिभङ्गिप्रबन्धः ॥ २८३, २८४ ॥

(क०) अथ हरविलासं लक्षयति—पदैरित्यादि । **सबिरुदैरिति** पदविशेषणम् । अतो बिरुदस्योपसर्जनत्वश्रुत्या पदशेषत्वं प्रतीयते । तेन सबिरुदैः पदैरेकं गीतखण्डं गायेदिति भावः । अनन्तरं पाटैर्द्वितीयः खण्डः । ततस्तेनैस्तृतीयः । तत्र प्रथमखण्ड उद्ग्राहः । द्वितीयतृतीयौ ध्रुवौ । पदान्तरैराभोगः । अतोऽयं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । स्वराभावात् पञ्चाङ्गः ।

स्वराङ्कप्रबन्धः

**पदैः स्वरैश्च बिरुदैरुद्ग्राहादित्रयं क्रमात् ।**
**एकद्वित्राश्च तालाः स्युः स्वराङ्के न्यसनं स्वरैः[1] ॥२८६॥**

इति स्वराङ्कप्रबन्धः ।

श्रीवर्धनप्रबन्धः

**श्रीवर्धनः स्याद्बिरुदैः पाटैरपि पदैः स्वरैः ।**

आनन्दिनीजातिमान् । अथ सुदर्शनं लक्षयति—**पदैश्चे**त्यादि । स्पष्टार्थः । स्वरपाटाभावाच्चतुरङ्गोऽयम् । दीपनीजातिमान् ॥ २८५ ॥

(सं०) हरविलाससुदर्शनौ लक्षयति—पदैरिति । स्पष्टार्थौ ॥ २८९ ॥

**(क०)** अथ स्वराङ्कं लक्षयति—**पदैरि**त्यादि । पदैरुद्ग्राहः; स्वरैर्मेलापः, बिरुदैर्ध्रुव इत्ययं क्रमः । अत्रोद्**ग्राहादित्रय**मिति विशेषोक्त्या मेलापकसद्भावादनुक्तविशेषेषु प्रबन्धेषु मेलापकाभावो ज्ञायते । **एकद्वित्राश्च ताला** इति । उद्ग्राहे एकस्तालः, मेलापके द्वौ तालौ, ध्रुवे त्रयस्तालाः कर्तव्याः स्युः । **मालवश्रियेति** । मालवश्रीसंज्ञकेन रागेण गातव्य इत्यर्थः । आभोगः पूर्ववत् कर्तव्यः । तेनायं चतुर्धातुः । रागनियमान्नियुक्तः । पाटतेनकाभावात् चतुरङ्गः । दीपनीजातिमान् ॥ २८६ ॥

(सं०) स्वराङ्कं लक्षयति—पदैरिति । पदैरेकेन तालेनोद्ग्राहः ; स्वरैस्तालद्वयेन ध्रुवः ; बिरुदैस्तालत्रयेणाभोगः ; **स्वरैः** समाप्तिः ; स स्वराङ्कः ॥ २८६ ॥

**(क०)** अथ श्रीवर्धनं लक्षयति—**श्रीवर्धन** इत्यादि । अत्र बिरुद-

[1] मालवश्रिया इति कलानिधिपाठः ।

**तालमानद्वयन्यासो निःशङ्केन प्रकीर्तितः ॥ २८७ ॥**

इति श्रीवर्धनप्रबन्धः ।

हर्षवर्धनप्रबन्धः

**पदैश्च बिरुदैर्हर्षवर्धनः स्वरपाटकः ।**

इति हर्षवर्धनप्रबन्धः ।

वदनप्रबन्धः

**छपद्वयं दो वदनं स्वरपाटयुतान्तरम् ॥ २८८ ॥**
**तथोपवदनं प्रोक्तं छगणाद्यदतैर्युतम् ।**
**तथैव वस्तुवदनं छयुगाद्दचतैः कृतम् ॥ २८९ ॥**

इति वदनप्रबन्धः ।

पाटाभ्यामुद्ग्राहः । पदस्वराभ्यां ध्रुवः । सुगममन्यत् । हर्षवर्धनलक्षणं स्पष्टार्थम् ॥ २८७, २८८ ॥

(सं०) श्रीवर्धनं लक्षयति—**श्रीवर्धन** इति । बिरुदादिभिर्विरचितः **श्रीवर्धनः**। तस्य तालावृत्तिद्वयेन न्यासः । हर्षवर्धनं लक्षयति—**पदैरिति**। पदबिरुदमात्रैर्विरचितो **हर्षवर्धनः** ॥ २८७, २८८ ॥

(क०) अथ वदनं लक्षयति—**छपद्वयमित्यादि** । छपयोः छगण-पगणयोर्द्वयं **दो** दगणश्चेति वदनस्य पादे त्रयो मात्रागणा भवन्ति । अयमेवोद्ग्राहः । **स्वरपाटयुतान्तरमिति** । तादृगेव द्वितीयः पादः स्वरपाटयुतः सन्नन्तर इति व्यपदिश्यते । अत्र युतशब्देन 'छपद्वयं दः' इत्येतदन्तरेऽपि कर्तव्यमिति गम्यते; अन्यथा स्वरपाटकृतान्तरमित्येव ब्रूयात् । अत्रान्तरशब्देन ध्रुव उच्यते, उद्ग्राहाभोगयोर्मध्ये भवत्वात् । न तु ध्रुवाभोगान्तरजातो धातुः; तथा सति ह्यत्र पार्थक्येन ध्रुवेण भवितव्यम्; तदभावादिति भावः । स्वरपाट-

चच्चरीप्रबन्धः

**रागो हिन्दोलकस्तालश्चचरी बहवोऽङ्घ्रयः ।**
**यस्यां षोडशमात्राः स्युर्द्वौ द्वौ च प्राससंयुतौ ॥२९०॥**
**सा वसन्तोत्सवे गेया चच्चरी प्राकृतैः पदैः ।**
**चच्चरीच्छन्दसेत्यन्ये क्रीडातालेन वेत्यपि ॥ २९१ ॥**
**घत्तादिच्छन्दसा वा स्याच्छन्दोलक्ष्मोदिताभिधा ।**

इति चच्चरीप्रबन्धः ।

युतोऽन्तरो यस्मिन्निति वदनविशेषणम् । सुगममन्यत् । अत्र पदान्तरैराभोगः कर्तव्यः । तेनायं त्रिधातुः । छन्दस्ताला‌द्यनियमादनिर्युक्तः । बिरुदतेनकहीनत्वात चतुरङ्गः । दीपनीजातिमान् ॥ २८८, २८९ ॥

(सं०) वदनं लक्षयति—छपद्वयमिति । छगणः पूर्वं, ततश्च पद्वयं, ततोऽनन्तरं दो दगणः ; एतैः स्वरैः पाटैर्युक्तमन्तरं मध्यप्रदेशो यस्य तत् **वदनम्**। तदेव छगणचगणदगणतगणैर्युतमुपवदनम् । तथैव स्वरपाटविरचितं छगणद्वयेन दगणचगणतगणैः कृतं चेत् वस्तुवदनमित्युच्यते । षण्मात्रो गणश्छगणः, चतुर्मात्रश्चः, त्रिमात्रस्तः, द्विमात्रो द इति पूर्वोक्तमनुसंधेयम् ॥ २८८, २८९ ॥

(क०) अथ चच्चरीं लक्षयति—**राग** इत्यादि । **चच्चरी ताल** इति । 'विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चच्चरी' इति तस्य लक्षणं वक्ष्यते । **यस्यां** चच्चर्यां **षोडशमात्रा बहवोऽङ्घ्रयः स्युः** । तत्र **द्वौ द्वौ** पादौ प्रासयुतौ भवतः । **चच्चरीच्छन्दसेति** । षोडशमात्रात्मकपादयुक्तं चच्चरीच्छन्दः अवगन्तव्यम् । **क्रीडातालेन** वेति । 'क्रीडा द्रुतौ विरामान्तौ' इति तस्य लक्षणं वक्ष्यते । **घत्तादिच्छन्दसा** वेति । यदा क्रीडातालेन प्रयुज्यते, तदा धत्तादिच्छन्दः प्रयोक्तव्यमित्यर्थः । तत्रादिशब्देन यत् क्रीडातालप्रयोगयोग्यं तत् छन्दो गृह्यते । घत्ताच्छन्दोऽपि तादृशमवगन्तव्यम् । **छन्दोलक्ष्मोदिताभि-**

चर्याप्रबन्धः

**पद्धडीप्रभृतिच्छन्दाः पादान्तप्रासशोभिता ॥ २९२ ॥**
**अध्यात्मगोचरा चर्या स्याद् द्वितीयादितालतः ।**
**सा द्विधा छन्दसः पूर्त्या पूर्णापूर्णा त्वपूर्तितः ॥२९३॥**
**समध्रुवा च विषमध्रुवेत्येषा पुनर्द्विधा ।**

धेति । इयमेव चच्चरी यदा छन्दोऽन्तरेण गीयते, तदा छन्दःशास्त्रोक्त-तत्तच्छन्दोनाम्ना व्यपदिश्यत इत्यर्थः । अत्र पूर्वार्धमुद्ग्राहः । उत्तरार्धं ध्रुवः । पृथक्पदैराभोगः । अतोऽयं त्रिधातुः । छन्दस्तालनियमान्निर्युक्तः । पदतालबद्ध-त्वात् द्व्यङ्गः । तारावलीजातिमान् ॥ २९०–२९२ ॥

(सं०) चच्चरीं लक्षयति—**राग** इति । पूर्वोक्तो हिन्दोलो **रागः** । 'विरामान्तद्रुतद्वंद्वान्यष्टौ लघु च चच्चरी' इति वक्ष्यमाणश्चच्चरीतालः । **षोडश-मात्रा बहवः** पादाः । तेषु **द्वौ द्वौ** पादावनुप्राससंयुक्तौ । **सा चच्चरी** । **प्राकृतैः** देशभाषोपनिबद्धैः **पदैः** कृता । **वसन्तोत्सवे गेया** । मतान्तरमाह—**चच्चरीति** । चच्चरीनाम्ना छन्दसा गेयेयमिति केचिदाहुः । केचित्तु **क्रीडातालेन** गेयेत्याहुः ; अथवा घत्तायत्यादिच्छन्दसा । छन्दोलक्षणे उदिता अभिधा यस्याः ; येन छन्दसा गीयते तन्नामवती भवतीत्यर्थः ॥ २९०–२९२ ॥

(क०) अथ चर्यां लक्षयति—पद्धडीत्यादिना । **पद्धडीप्रभृति-च्छन्दा** इति । पद्धडीप्रभृतीनि छन्दांसि यस्याः सा; पद्धडीप्रभृतिषु छन्दःस्वेकेन बद्धेत्यर्थः । पद्धडीछन्दोलक्षणमनन्तरमेव वक्ष्यते । **अध्यात्म-गोचरेति** । अध्यात्मं विषयीकृत्य प्रवृत्तेत्यर्थः । **द्वितीयादितालत** इति । 'दौ लो द्वितीयकः' इति द्वितीयतालस्य लक्षणं वक्ष्यते । आदिशब्देन तत्सममात्रोऽन्योऽपि तालो गृह्यते । **समध्रुवेति** । समो ध्रुवो यस्या इति बहुव्रीहिः । समशब्दस्य सापेक्षत्वादत्र प्रत्यासत्त्योद्ग्राह एवापेक्ष्यते । तेन

**आवृत्त्या सर्वपादानां गीयते सा ध्रुवस्य वा ॥ २९४ ॥**

इति चर्याप्रबन्धः ।

पद्धडीप्रबन्धः

**[1]चरणान्तसमप्रासा पद्धडीच्छन्दसा युता ।**
**बिरुदैः स्वरपाटान्तै रचिता पद्धडी मता ॥ २९५ ॥**

इति पद्धडीप्रबन्धः ।

ध्रुवस्योद्ग्राहसमत्वमवगम्यते । एवं विषमध्रुवेत्यत्रापि ध्रुवस्योद्ग्राहापेक्षया न्यूनत्वेन वाधिकत्वेन वा विषमत्वं द्रष्टव्यम् । आभोगः पृथक्पदैः कर्तव्यः । तेनायं त्रिधातुः । छन्दस्तालनियमान्निर्युक्तः । पदतालबद्धत्वात् द्व्यङ्गः । तारावलीजातिमान् ॥ २९२-२९४ ॥

(सं०) चर्यां लक्षयति—पद्धडीति । पद्धडीराहडीमुख्यानि छन्दांसि यस्याम् ; पादानामन्तोऽनुप्रासयुक्तः ; अध्यात्मवाचकैः पदैरुपनिबद्धा ; सा चर्या । द्वितीयादितालैः सा कर्तव्या । तृतीयाबहुवचनार्थे तसिल्प्रत्ययः । सा द्विप्रकारा—छन्दःपूर्तौ पूर्णा ; अपूर्तावपूर्णा । पुनरपि द्विधा—सर्वेषां पादानामावृत्तौ समध्रुवा ; ध्रुवस्यैवावृत्तौ विषमध्रुवेति ॥ २९२-२९४ ॥

(क०) अथ पद्धडीं लक्षयति—**चरणान्तेत्यादि** । चरणान्तेषु पादान्तेषु सम एकरूपः प्रासो वर्णावृत्तिर्यस्याः सा । **पद्धडीच्छन्दसेति** ।

"षोडश मात्राः पादे पादे यत्र भवन्ति निरस्तविवादे ।
पद्धडिका जगणेन विमुक्ता चरमगुरुः सा सद्भिरिहोक्ता ॥"

इति तस्य लक्षणमुदाहरणं च । तेन छन्दसा युक्ता । **स्वरपाटान्तैर्बिरुदैः रचितेति** । प्रथमार्धं बिरुदैः रचयित्वा स्वरान् प्रयुञ्जीत । द्वितीयार्धमपि

[1] युग्मपादान्तगप्रासा इति सुधाकरपाठः ।

राहडीप्रबन्धः

**यत्र वीररसेन स्यात् संग्रामरचितस्तुतिः ।**
**बहुभिश्चरणैः सात्र राहडी परिकीर्तिता ॥ २९६ ॥**

इति राहडीप्रबन्धः ।

वीरश्रीप्रबन्धः

**पदैश्च बिरुदैर्बद्धा वीरश्रीरिति गीयते ।**

इति वीरश्रीप्रबन्धः ।

बिरुदैः रचयित्वा पाटान् प्रयुञ्जीतेत्यर्थः । अत्र सस्वरं प्रथमार्धमुद्ग्राहः । सपाटं द्वितीयार्धं ध्रुवः । पदैराभोगः कल्पनीयः । तेनायं त्रिधातुः । छन्दोनियमान्निर्युक्तः । तेनकाभावात् पञ्चाङ्गः । आनन्दिनीजातिमान् ॥ २९५ ॥

(सं०) पद्धडीं लक्षयति—युग्मेति । युग्मयोः द्वितीयचतुर्थयोः पादयोरन्ते अनुप्रासयुता, **पद्धडीच्छन्दसा** पाटान्तैः स्वरसहितैर्बिरुदैश्च कृता पद्धडी ॥ २९५ ॥

**(क०)** अथ राहडीं लक्षयति—**यत्रेति** । **संग्रामरचितस्तुतिरिति वीररसेनेत्यस्य** स्पष्टीकरणम् । तत्र बहुषु चरणेषु केचनोद्ग्राहाः, केचन ध्रुवाः कर्तव्याः । पृथगाभोगः कल्पनीयः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । पदतालबद्धत्वात् द्व्यङ्गः । तारावलीजातिमान् ॥ २९६ ॥

(सं०) राहडीं लक्षयति—**यत्रेति** । बहुभिः पादैः संग्रामो वर्ण्यते यस्यां **सा राहडी** ॥ २९६ ॥

**(क०)** अथ वीरश्रियं लक्षयति—**पदै**रित्यादि । पदैरुद्ग्राहः । बिरुदैर्ध्रुवः । आभोगः पृथक् कर्तव्यः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । पदतालबिरुदबद्धत्वात् त्र्यङ्गः । भावनीजातिमान् ॥ २९७ ॥

मङ्गलाचारप्रबन्धः

**यस्तु गद्येन पद्येन गद्यपद्येन वा कृतः ॥ २९७ ॥**
**कैशिक्या मङ्गलाचारः सनिःसारुः स्वरान्वितः ।**

इति मङ्गलाचारप्रबन्धः ।

धवलप्रबन्धः

**त्रिविधो धवलः कीर्तिर्विजयो विक्रमस्तथा ॥ २९८ ॥**
**चतुर्भिश्चरणैः षड्भिरष्टभिश्च क्रमादसौ ।**

(सं०) वीरश्रियं लक्षयति—पदैरिति । पदैर्विरुदैश्च निबद्धा वीरश्रीः ॥ २९७ ॥

(क०) अथ मङ्गलाचारं लक्षयति—यस्त्वित्यादि । **गद्यपद्येनेति** द्वंद्वैकवद्भावः । **कैशिक्येति** । कैशिकी नाम शुद्धपञ्चमस्य भाषारागः; तया गातव्यः । **सनिःसारुरिति** । निःसारुतालेन सहितः । 'विरामान्तौ लघू निःसारुको मतः' इति तस्य लक्षणं वक्ष्यते । **स्वरान्वित** इति । पदान्ते अर्धान्ते वा स्वरैरन्वितः कर्तव्यः । अत्र सस्वरं प्रथमार्धमुद्ग्राहः । सस्वरं द्वितीयार्धं ध्रुवः । आभोगः पृथक् कर्तव्यः । तेनायं त्रिधातुः । तालादिनियमान्निर्युक्तः । पदस्वरतालबद्धत्वात् त्र्यङ्गः । भावनीजातिमान् ॥ २९७, २९८ ॥

(सं०) मङ्गलाचारं लक्षयति—**यस्त्विति** । कैशिकीरागेण निःसारुतालेन स्वरसहितो यो गीयते, स **मङ्गलाचारः** । स त्रिविधः—गद्यजः, पद्यजः, गद्यपद्यजश्चेति ॥ २९७, २९८ ॥

(क०) अथ धवलं लक्षयति—**त्रिविध** इत्यादि । **चतुर्भिश्चरणैः** रचितः कीर्तिधवलः, **षड्भिः** रचितो विजयधवलः, **अष्टभिः** रचितो विक्रम-

**विषमे तु छयुग्मं स्यात् तो वा दो वाधिकः समे ॥२९९॥**
**तदा स्यात् कीर्तिधवलो विजये त्वाद्यतुर्ययोः ।**
**दौ द्वौ षष्ठे द्वितीये च शेषौ द्वौ छेन पेन वा ॥ ३०० ॥**
**प्रथमे चास्त्रयो दः स्यात् तृतीये दास्त्रयस्तु च ।**
**तुर्यद्वितीययोश्चैतत् पञ्चमे सप्तमे तथा ॥ ३०१ ॥**
**षष्ठेऽष्टमे दाश्चत्वारो यस्यासौ विक्रमो मतः ।**
**आशीर्भिर्धवलो गेयो धवलादिपदान्वितः ॥ ३०२ ॥**
**यदृच्छया वा धवलो गेयो लोकप्रसिद्धितः ।**

इति धवलप्रबन्धः ।

धवल इति क्रमो द्रष्टव्यः । **विषम** इति । **विषमे** पादे **छयुग्मं** छगणयोः षण्मात्रिकयोर्युग्मं **स्या**दिति । विषमपादे द्वादश मात्राः कर्तव्या इत्यर्थः । **समे** समपादे । **तो वा दो वाधिक** इति । छयुग्मात् परं तगणस्त्रिमात्रिकः, दगणो द्विमात्रिको **वाधिको** भवति । समपादे पञ्चदश वा चतुर्दश वा मात्राः कर्तव्या इत्यर्थः । **विजये त्वि**ति । षट्पादयुक्ते विजयधवले त्वाद्यतुर्ययोः पादयोः, तथा **षष्ठे द्वितीये च** पादे **दौ द्वौ** दगणौ । कीर्तिधवलपादापेक्षयाधिकौ भवत इत्यर्थः । **शेषौ** तृतीयपञ्चमौ **द्वौ** पादौ **छेन** छगणेन **पेन** पगणेन वाधिकौ भवतः । विक्रमधवलस्य लक्षणमाह—**प्रथम** इति । प्रथमे पादे चाश्चगणास्त्रयः । **दो** दगणोऽपि **स्यात्** । तृतीयपादे **दास्त्रयः** । **तुर्यद्वितीययोश्चैत**दिति । चतुर्थे चास्त्रयो दश्च; द्वितीये दास्त्रयस्तु चेत्यर्थः । **पञ्चमे सप्तमे तथे**ति । पञ्चमे तुर्योक्तं सप्तमे द्वितीयोक्तं च द्रष्टव्यम् । **षष्ठेऽष्टमे दाश्चत्वारो** भवन्ति । **आशीर्भि**राशीर्वादैः । **धवलादिपदान्वित** इति । आदिशब्देन विमलादीनि गृह्यन्ते । **यदृच्छये**ति; उक्तगणादिनियमराहित्येन । **लोकप्रसिद्धित** इति । वर्तमानलक्ष्यानुसारेणेत्यर्थः । त्रिष्वपि धवलभेदेषु पूर्वार्धमुद्ग्राहः । उत्तरार्धं

मङ्गलप्रबन्धः

**कैशिक्यां बोट्टरागे वा मङ्गलं मङ्गलैः पदैः ॥ ३०३ ॥**
**विलम्बितलये गेयं मङ्गलच्छन्दसाथवा ।**

इति मङ्गलप्रबन्धः ।

ध्रुवः । आभोगः पृथक् कर्तव्यः । तेनायं त्रिधातुः । तालाद्यनियमादनिर्युक्तः । पदतालबद्धत्वात् द्व्यङ्गः । तारावलीजातिमान् ॥ २९८–३०३ ॥

(सं०) धवलं लक्षयति—**त्रिविध** इति । **धवलस्त्रिविधः** । **चतुर्भिश्चरणै**-रुपनिबद्धः **कीर्तिः**, **षड्भिश्चरणैर्विजयः**, **अष्टभिश्चरणैर्विक्रम** इति । एतेषु मात्रा-नियममाह—**विषम** इति । **विषमे** प्रथमे तृतीये च चरणे छगणद्वयम् । समे द्वितीये चतुर्थे च चरणे तगणो दगणो वाधिकः । तदा **कीर्तिधवलः** । प्रथम-चतुर्थयोः षष्ठे द्वितीये च चरणे द्वौ दगणौ स्तः । शेषौ तृतीयपञ्चमौ छगणेन पगणेन वाधिकौ । तदा **विजयधवलः** । प्रथमे चगणत्रयम्; दो दगणः । तृतीये दगणत्रयम् । चतुर्थद्वितीययोश्चैतदेव । पञ्चमे चगणत्रयं दगणश्च । सप्तमे दगण-त्रयम् । षष्ठाष्टमयोर्दगणाश्चत्वारः । तदा **विक्रमधवल** इति । स च धवलो धवलादिपदैराशीर्वादैर्गेयः । **यदृच्छया वेति**; **यदृच्छया वा लोकप्रसिद्धितो** वा गेयः ॥ २९८–३०३ ॥

(क०) अथ मङ्गलं लक्षयति—**कैशिक्यामित्यादि** । **मङ्गलैः पदैरिति** । शङ्खचक्राब्जकोककैरवादिशंसिभिरित्यर्थः । **मङ्गलच्छन्दसेति** । "पञ्च चकारगणाः प्रतिपादगताश्चेन्मङ्गलमाहुरिदं सुधियः खलु वृत्तम्" इति तस्य लक्षणमुदाहरणं च । अत्रोद्ग्राहादिकल्पनादिकं पूर्ववत् ॥३०३,३०४॥

(सं०) मङ्गलं लक्षयति—**कैशिक्यामिति** । कैशिकीरागे **बोट्टरागे वा** कल्याणवाचकैः **पदैर्विलम्बितेन** लयेन मङ्गलो गेयः । **अथवा** मङ्गलनाम्ना छन्दसा ॥ ३०३, ३०४ ॥

ओवीप्रबन्धः

खण्डत्रयं प्रासयुतं गीयते देशभाषया ॥ ३०४ ॥
ओवीपदं तदन्ते चेदोवी तज्ज्ञैस्तदोदिता ।
त्रयाणां चरणानां स्युरेकाद्यावृत्तितो भिदाः ॥ ३०५ ॥
आदिमध्यान्तगैः प्रासैरेकाद्यैश्च पदे पदे ।
छन्दोभिर्बहुभिर्गेया ओव्यो जनमनोहराः ॥ ३०६ ॥

इत्योवीप्रबन्धः ।

लोलीप्रबन्धः

सानुप्रासैस्त्रिभिः खण्डैर्मण्डिता प्राकृतैः पदैः ।
प्रान्ते लोलीपदोपेता लोली गेया विचक्षणैः ॥ ३०७ ॥

इति लोलीप्रबन्धः ।

ढोल्लरीप्रबन्धः

दोहडः स्याद्यदा प्रान्ते प्रोल्लसड्ढोल्लरीपदः ।
ढोल्लरी नाम सा प्रोक्ता लाटभाषाविभूषिता ॥ ३०८ ॥

इति ढोल्लरीप्रबन्धः ।

दन्तीप्रबन्धः

अनुप्रासप्रधानं चेत् खण्डत्रयसमन्वितम् ।
दन्तीपदान्वितं प्रान्ते तदा दन्ती निगद्यते ॥ ३०९ ॥

इति दन्तीप्रबन्धः ।

(क०) ओव्यादीनां चतुर्णां लक्षणानि स्फुटार्थानि । मेलापकाभोगवर्जितत्वाच्चत्वारोऽपि द्विधातवः । तत्राद्यं खण्डद्वयमुद्ग्राहः । तृतीयं खण्डं ध्रुवः ।

**अनुक्ताभोगवस्तूनां पदैराभोगकल्पना ।**
**ओव्यादयस्तु चत्वारो भवन्त्याभोगवर्जिताः ॥ ३१० ॥**

इति विप्रकीर्णप्रबन्धाः ।

सालगसूडप्रबन्धानिरूपणम्

**शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते ।**
**एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ॥ ३११ ॥**

तालाद्यनियमाच्चत्वारोऽप्यनिर्युक्ताः । पदतालबद्धत्वात् द्व्यङ्गाः । तारावलीजातिमन्तः ॥ ३०४–३१० ॥

(सं०) ओवीं लक्षयति—खण्डत्रयमिति । **देशभाषया** अनुप्रासेन च खण्डत्रयोपेतमन्ते ओवीति पदं गीयते चेत्, तदा **ओवी** । एतस्याश्चरणावृत्तिभेदेन पदे पदे आदौ मध्ये अन्ते चानुप्रासभेदैश्च बहवो भेदा भवन्ति । एताश्च बहुभिश्छन्दोभिर्गेयाः । लोलीं लक्षयति—**सानुप्रासैरिति** । ओवीलक्षणे ओवीपदस्थाने लोलीपदं प्रयुज्यते चेत्, तदा **लोली** । ढोल्लरीं लक्षयति—**दोहड** इति । पूर्वलक्षिते दोहडे प्रान्ते ढोल्लरीपदं गीयते चेत्, तदा **ढोल्लरी** । सा लाटभाषया गेया । दन्तीं लक्षयति—**अनुप्रासेति** । सानुप्रासं खण्डत्रयस्य प्रान्ते दन्तीपदप्रक्षेपे **दन्ती** । साधारणं लक्षणमाह—अनुक्तेति । येषु प्रबन्धेष्वाभोगो नोक्तः, तत्र पदैराभोगो ज्ञातव्यः । ओव्यादिषु चतुर्षु प्रबन्धेषु नास्त्याभोगः ॥ ३०४–३१०

(क०) अथाध्यायादावुद्दिष्टं सालगसूडं लक्षयितुं संगतिं दर्शयति—**शुद्ध** इत्यादि । **शुद्धः** शास्त्रोक्तनियमेन प्रवर्तितः । **छायालगः**; छायां शुद्धसादृश्यं लगति गच्छतीति तथोक्तः । **एलादिरिति** । एलामारभ्यैकतालीपर्यन्तमष्टभिर्गीतैः शुद्धसूड इत्युक्तः । **ध्रुवादिरिति** । वक्ष्यमाणं ध्रुवमारभ्य

**छायालगत्वमेलादेर्यद्यप्याचार्यसंमतम् ।**
**लोके तथापि शुद्धोऽसौ शुद्धसादृश्यतो मतः ॥ ३१२ ॥**
**[1]जात्याद्यन्तरभाषान्तं शुद्धं प्रकरणान्वितम् ।**
**तत्रोक्तः शुद्धसूडः प्राक् सालगस्त्वधुनोच्यते ॥ ३१३ ॥**

वक्ष्यमाणैकतालीपर्यन्तं सप्तभिर्गीतैः सालगसूडोऽभिमतः । सालग इति छायालग-शब्दस्यापभ्रंशो लोकप्रसिद्ध्या प्रयुक्त इति वेदितव्यम् । ननु जात्यादेरेव शुद्धत्वम्; एलादेस्तु तच्छायानुकारित्वात् सालगत्वमेव; तत् कथमेलादिः शुद्ध इत्युक्तमित्यत आह—**छायालगत्वमेलादेरित्यादि** । **शुद्धसादृश्यत** इति । शुद्धस्य जात्यादेः सादृश्यतो नियमानतिलङ्घनादित्यर्थः । अतः शुद्धत्व-मौपचारिकमेलादेः । ध्रुवादेस्तु नियमातिलङ्घनात् सर्वथा सालगत्वमेवेति भावः । **जात्याद्यन्तरभाषान्तमिति** । जातिकपालकम्बलगीतिग्रामरागोपरागभाषाविभाषा-न्तरभाषापर्यन्तमित्यर्थः । **प्रकरणान्वितमिति** । **तालाध्याये** वक्ष्यमाणानि मन्द्रकादिचतुर्दशगीतानि प्रकरणानीत्युच्यन्ते । तान्यपि नियमानतिलङ्घनेनैव प्रवर्तितत्वात् शुद्धेऽन्तर्भूतानीत्यर्थः ॥ ३११–३१३ ॥

(सं०) सालगसूडं लक्षयितुमाह—शुद्ध इति । **सूडो द्विविधः—शुद्धः, छायालगश्चेति** । तत्रैलादिः शुद्धः; ध्रुवादिः सालगः । सालगछायालगौ पर्यायौ । ननु भरतेनैलादीनां छायालगत्वमुक्तम्; तत् कथं शुद्धत्वमुच्यते? तत्राह—**छायालगत्वमिति** । शुद्धसादृश्येनैव शुद्धत्वम्; न तु मुख्यं शुद्धत्वमित्यर्थः । किं तच्छुद्धम्, यत्सादृश्यमेलादेः? तत्राह—श्रुत्यादीति । श्रुतिप्रकरणमारभ्या-न्तरभाषापर्यन्तं यदुक्तं तत् । प्रकरणानि च **तालाध्याये** वक्ष्यमाणानि चतुर्दश गीतानि । एतावत् शुद्धम् । अनेन सह एलादेः सादृश्यमनियतत्वं सम्यक्प्रयोगे फलम्; असम्यक्प्रयोगे दोष इत्यादि ज्ञातव्यम् ॥ ३११–३१३ ॥

[1] श्रुत्यादीति सुधाकरपाठः ।

आद्यो ध्रुवस्ततो मण्ठप्रतिमण्ठनिसारुकाः ।
अड्डतालस्ततो रास एकतालीत्यसौ मतः ॥ ३१४ ॥

ध्रुवप्रबन्धः

[1]एकधातुर्द्विखण्डः स्याद्यत्रोद्ग्राहस्ततः परम् ।
किंचिदुच्चं भवेत् खण्डं द्विरभ्यस्तमिदं त्रयम् ॥ ३१५ ॥
ततो द्विखण्ड आभोगस्तस्य स्यात् खण्डमादिमम् ।
एकधातु द्विखण्डं च खण्डमुच्चतरं परम् ॥ ३१६ ॥
स्तुत्यनामाङ्कितश्चासौ क्वचिदुच्चकखण्डकः ।
उद्ग्राहस्याद्यखण्डे च न्यासः स ध्रुवको भवेत् ॥ ३१७ ॥
एकादशाक्षरात् खण्डादेकैकाक्षरवर्धितैः ।
खण्डे ध्रुवाः षोडश स्युः षड्विंशत्यक्षरावधि ॥ ३१८ ॥
जयन्तशेखरोत्साहास्ततो मधुरनिर्मलौ ।
कुन्तलः कामलश्चारो नन्दनश्चन्द्रशेखरः ॥ ३१९ ॥
कामोदो विजयाख्यश्च कंदर्पजयमङ्गलौ ।
तिलको ललितश्चेति संज्ञाश्चैषां क्रमादिमाः ॥ ३२० ॥
आदितालेन शृङ्गारे जयन्तो गीयते बुधैः ।
स नेतृश्रोतृगातृणामायुःश्रीवर्धनो मतः ॥ ३२१ ॥

(क०) सालगसूडस्थानि गीतान्युद्दिशति—आद्यो ध्रुव इत्यादि । असाविति सालगसूडः । मतः संमतः । सभेदानां ध्रुवादीनां लक्षणानि स्पष्टार्थानि ।

ननु—'मण्ठवत् प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम्' इति वचनेन प्रतिमण्ठादिषूद्ग्राहाद्यवयवसंनिवेशस्य मण्ठवदित्यतिदेशात् मण्ठात् प्रतिमण्ठा-

[1] एकधातुद्विखण्ड इति सुधाकरपाठः ।

ऋद्धिसौभाग्यदो वीरे निःसारौ शेखरो भवेत् ।
प्रतिमण्ठेन हास्ये स्यादुत्साहो वंशवृद्धिकृत् ॥ ३२२ ॥
मधुरो भोगदो गेयः करुणे हयलीलया ।
क्रीडातालेन शृङ्गारे निर्मलस्तनुते प्रभाम् ॥ ३२३ ॥
लघुशेखरतालेन कुन्तलोऽभीष्टदोऽद्भुते ।
कामलो विप्रलम्भे स्याज्झम्पातालेन सिद्धिदः ॥३२४॥
हर्षोत्कर्षप्रदश्चारो वीरे निःसारुतालतः ।
नन्दनो वीरशृङ्गार एकताल्येष्टसिद्धिदः ॥ ३२५ ॥
वीरे हास्ये च शृङ्गारे प्रतिमण्ठेन गीयते ।
अभीष्टफलदः श्रोतृगातॄणां चन्द्रशेखरः ॥ ३२६ ॥
प्रतिमण्ठेन शृङ्गारे कामोदोऽभीष्टकामदः ।
हास्ये द्वितीयतालेन विजयो नेतुरायुषे ॥ ३२७ ॥
हास्यशृङ्गारकरुणेष्वादितालेन गीयते ।
कंदर्पो भोगदो नृणां श्रीसदाशिवसंमतः ॥ ३२८ ॥
क्रीडातालेन शृङ्गारे वीरे च जयमङ्गलः ।
जयोत्साहप्रदः पुंसां ध्रुवकस्तिलकाभिधः ॥ ३२९ ॥
रसे वीरे च शृङ्गार एकताल्या प्रगीयते ।
प्रतिमण्ठेन शृङ्गारे ललितः सर्वसिद्धये ॥ ३३० ॥

दीनामवयवसंनिवेशकृतो भेदो नास्त्येव; 'तथाऽप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते' इति प्रतिज्ञाय 'तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकम्' इत्यादिभिर्वचनैस्तालानामेवात्र भेदकत्वेनोपादानात् केवलानां रसानामत्र भेदकत्वं न विवक्षितमेव। एवं स्थिते सति मण्ठभेदस्य कलापस्य तालः 'कलापो नगणेन तु विरामान्तेन' इत्युक्तः। तथा प्रतिमण्ठभेदस्य विचारस्यापि तालः

स्याद्वर्णनियमः सर्वखण्डे खण्डद्वये तथा ।
यथोक्तान् यो जयन्तादीन् गायेन्निपुणया धिया ॥३३१॥
सर्वक्रतुफलं तस्येत्यवोचन्मुनिसत्तमः ।

इति ध्रुवप्रबन्धः ।

मण्ठप्रबन्धः

द्वियत्येकविरामं वा यस्योद्ग्राहाख्यखण्डकम् ॥ ३३२ ॥
ततः खण्डं ध्रुवाख्यं द्विस्ततो वैकल्पिकोऽन्तरः ।
तं गीत्वा ध्रुवमागत्य वाभोगो गीयते सकृत् ॥ ३३३ ॥
ध्रुवे न्यासस्ततः प्रोक्तः स मण्ठो मण्ठतालतः ।
जयप्रियो मङ्गलश्च सुन्दरो वल्लभस्तथा ॥ ३३४ ॥
कलापः कमलश्चेति षड् भेदा मण्ठके मताः ।
षट्प्रकारो मण्ठतालो रूपकं तेन भिद्यते ॥ ३३५ ॥
वीरे जयप्रियो गेयो मण्ठेन जगणात्मना ।
मङ्गलो भेन शृङ्गारे सुन्दरः सेन तद्रसे ॥ ३३६ ॥
वल्लभो रेण करुणे कलापो नगणेन तु ।
विरामान्तेन गातव्यो रसे हास्ये विचक्षणैः ॥ ३३७ ॥
विरामान्तद्रुतद्वंद्वाल्लघुना कमलोऽद्भुते ।

इति मण्ठप्रबन्धः ।

'लघुत्रयाद्विरामान्ताद्विचारः' इत्युक्तः । अत एव तयोर्लक्षणयोः शब्दभेद एव, न त्वर्थभेदः । तेन मण्ठप्रतिमण्ठयोस्तालयोरत्रार्थपौनरुक्त्यं दोष इति चेत्; सत्यम् । अत्यल्पमिदमुच्यते द्वयोस्तालयोः पौनरुक्त्यं दोष इति । किंतु उत्तरस्मिन्नध्याये विंशत्यधिकशतेषु देशीतालेषु लक्षितेषु तत्र सालगसूडाश्रयैः कैश्चिदन्यैस्तालैः सह केषांचिद्बहूनां तालानां द्वयोर्द्वयोस्त्रयाणां त्रयाणां च मिथः

प्रतिमण्ठप्रबन्धः

मण्ठवत् प्रतिमण्ठादेर्लक्ष्मोद्ग्राहादिकं मतम् ॥ ३३८ ॥
तथाप्येषां विशेषस्तु प्रत्येकं प्रतिपाद्यते ।
तत्र च प्रतिमण्ठेन तालेन प्रतिमण्ठकः ॥ ३३९ ॥
चतुर्धा सोऽमरस्तारो विचारः कुन्द इत्यपि ।
अमरो गुरुणैकेन शृङ्गारे स विधीयते ॥ ३४० ॥
विरामान्तद्रुतद्वंद्वाल्लघुद्वंद्वेन जायते ।
ताराख्यः प्रतिमण्ठोऽसौ रसयोर्वीररौद्रयोः ॥ ३४१ ॥
लघुत्रयाद्विरामान्ताद्विचारः करुणे भवेत् ।
कुन्दो विराममध्येन लत्रयेणाद्भुते भवेत् ॥ ३४२ ॥
ते शृङ्गारेऽपि चत्वारो गीयन्ते लक्ष्मवेदिभिः ।

इति प्रतिमण्ठप्रबन्धः ।

निःसारुकप्रबन्धः

बद्धो निःसारुतालेन प्रोक्तो निःसारुको बुधैः ॥ ३४३ ॥
वैकुन्दानन्दकान्ताराः समरो वाञ्छितस्तथा ।
विशालश्चेति स प्रोक्तः षड्विधः सूरिशार्ङ्गिणा ॥ ३४४ ॥
द्रुतद्वंद्वाल्लघुद्वंद्वाद्वैकुन्दो मङ्गले भवेत् ।
कुर्यादानन्दमानन्दे विरामान्तद्रुतद्वयात् ॥ ३४५ ॥

पौनरुक्त्यं लक्षणतः प्रतीतं भविष्यति । तस्य तत्रैव परिहारं वक्ष्याम इति अत्र पृथङ् नोच्यते ! ननु जयन्तादिषु षोडशसु ध्रुवेषु योऽक्षरसंख्यानियम उक्तः, स वर्तमानेषु केषुचित् ध्रुवेषु न दृश्यते ; तत् कथं तेषां लक्षणहीनत्वेऽपि लोके परिग्रह इति चेत्; सत्यमेतत् । अत्राक्षरशब्देन पदान्यप्युच्यन्ते ; यथायमक्षरार्थ इति पदार्थो वर्ण्यते । तेन क्वचित् पदानां वा संख्याया नियमो

कान्तारो लगुरुभ्यां स्याद्विप्रलम्भे स गीयते ।
लघुद्वयाद्विरामान्तात् समरो वीरगोचरः ॥ ३४६ ॥
लघुत्रयाद् द्रुतद्वंद्वाद्वाञ्छितो वाञ्छितप्रदः ।
संभोगे स्याद्विशालाख्यो लाद् द्रुतद्वयतो लघोः ॥३४७॥

इति निःसारुकप्रबन्धः ।

अड्डतालप्रबन्धः

अड्डतालेन तालेनाड्डतालः परिकीर्तितः ।
निःशङ्कशङ्कशीलाश्च चारोऽथ मकरन्दकः ॥ ३४८ ॥
विजयश्चेति स प्रोक्तः षोढा सोढलसूनुना ।
लगुरुभ्यां द्रुतद्वंद्वान्निःशङ्को विस्मये भवेत् ॥ ३४९ ॥
लघोर्द्रुतद्वयेन स्याच्छङ्कः शृङ्गारवीरयोः ।
शान्ते शीलो विरामान्तद्रुतद्वंद्वाल्लघोर्भवेत् ॥ ३५० ॥
द्रुतद्वंद्वाल्लगाभ्यां स्याच्चारो वीरेऽद्भुते रसे ।
शृङ्गारे मकरन्दः स्याद् द्रुतद्वंद्वात् परे गुरौ ॥ ३५१ ॥
विजयाख्यो रसे वीरे द्रुताभ्यां लघुना भवेत् ।

इति अड्डतालप्रबन्धः ।

द्रष्टव्यः । यत्र सोऽपि नास्ति, तत्राक्षरादेः संख्यानियमाभावान्नियमोक्तादृष्टफलस्याभाव एव, न तु दृष्टफलस्य जनरञ्जनादेरपि । तेन तेषां लोकपरिग्रहोऽप्युपपन्न एव । अनियताक्षररसतालयुक्तस्योद्ग्राहाद्यवयवसंनिवेशस्याविशिष्टत्वेन तेषामपि सलक्षणत्वात् ध्रुवव्यवहारो न हीयत एव । मण्ठादीनां च रसतालादिनियमाभावोऽप्येवं द्रष्टव्यः । एते ध्रुवादयः सप्तापि मेलापकाभावात् त्रिधातवः । मण्ठादयस्तु षडपि 'ततो वैकल्पिकोऽन्तरः' इति वचनेन सान्तरत्व-

रासकप्रबन्धः

रासको रासतालेन स चतुर्धा निरूपितः ॥ ३५२ ॥
विनोदो वरदो नन्दः कम्बुजश्चेति शार्ङ्गिणा ।
आलापान्तध्रुवपदाद्विनोदः कौतुके भवेत् ॥ ३५३ ॥
ध्रुवादालापमध्यात्तु वरदो देवतास्तुतौ ।
खण्डमाद्यं द्विखण्डस्योद्ग्राहस्यालापनिर्मितम् ॥३५४॥
यस्यासौ रासको नन्दो गीयतेऽभ्युदयप्रदः ।
आलापादेर्ध्रुवपदात् कम्बुजः करुणे भवेत् ॥ ३५५ ॥
सर्वेषु रासकेष्वेषु द्विखण्डोद्ग्राहकल्पना ।

इति रासकप्रबन्धः ।

एकतालीप्रबन्धः

एकताली भवेत्तालेनैकताल्या त्रिधा च सा ॥ ३५६ ॥
रमा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ।
सकृद्विरतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः ॥ ३५७ ॥
यस्यामसौ रमा सा च गातृश्रोत्रोः श्रिये भवेत् ।
उद्ग्राहो द्विदलो यस्यामालापरचितोऽन्तरः ॥ ३५८ ॥
घनद्रुता घनयतिर्घनानुप्रासयोगिनी ।
चन्द्रिका सैकताली स्याद् भूरिसौभाग्यदायिनी॥३५९॥

पक्षे तेनान्तरेण सह चतुर्धातवः; अनन्तरत्वपक्षे तु त्रिधातव एव । अयमन्तरो लौकिकैरुपान्तर इत्युच्यते । तथा तैर्ध्रुवखण्डस्यान्तरव्यपदेशः कृत इति मन्तव्यम् । क्वचित् ध्रुवखण्डस्यान्तरव्यपदेशो ग्रन्थकारेणापि कृतः; यथात्रैकतालीलक्षणे 'सकृद्विरतिरुद्ग्राहोऽन्तरस्त्वक्षरनिर्मितः' इत्यत्रोद्ग्राहानन्तरमन्तरग्रहणादन्तरशब्देन ध्रुवखण्ड एवोच्यत इति गम्यते । अत्रान्तरस्त्वित्यत्र तुशब्देन

**आलापपूर्वकोद्ग्राहा विपुलानन्ददायिनी ।**
**आलापो गमकालप्तिरक्षरैर्वर्जिता मता ॥ ३६० ॥**
**सैव प्रयोगशब्देन शार्ङ्गदेवेन कीर्तिता ।**

इत्येकतालीप्रबन्धः ।

इति सालगसूडप्रबन्धाः ।

उद्ग्राहस्यालापरचितत्वमवगन्तव्यम् । एवम् 'आलापरचितोऽन्तरः' इत्यत्रापि ध्रुव एवान्तरशब्दवाच्यः । एते ध्रुवादयस्तालादिनियमान्निर्युक्ताः । पदतालबद्धत्वात् द्व्यङ्गाः । तारावलीजातिमन्तः ॥ ३१४—३६१ ॥

(सं०) सालगसूडप्रबन्धान् विभजते—**आद्यो ध्रुव** इति । ध्रुवादयः सप्त प्रबन्धाः । तेषु ध्रुवं लक्षयति—**एकधात्विति** । पूर्वं सदृशगेयखण्डद्वययुक्त उद्ग्राहः कर्तव्यः । ततोऽनन्तरं **किंचिदुच्चं खण्डमन्तराख्यं** कर्तव्यम् । एतत् **त्रयमपि द्विरभ्यस्तं** द्विर्गेयम् । ततोऽनन्तरं खण्डद्वययुक्त आभोगः । तस्य प्रथमं खण्डं सदृशगेयखण्डद्वययुक्तम् । द्वितीयखण्डं ततोऽप्युच्चं गातव्यम् । असावाभोगः स्तुत्यस्य नायकस्य नाम्ना युक्तः कार्यः । क्वचित् केषांचिन्मतेऽयमुच्चकखण्डो गातव्यः । उद्ग्राहस्य आद्यखण्डे च समाप्तिः । स ध्रुव इति ज्ञेयः । तस्य भेदानाह—**एकादशेति** । एकादशाक्षरखण्डादारभ्य षड्विंशत्यक्षरखण्डपर्यन्तमेकैकाक्षरवृद्ध्या जयन्तादयो ललितान्ता **षोडश ध्रुवा** भवन्ति । तेषां क्रमेण लक्षणमाह—**आदितालेनेति** । **आदितालेन** एकादशाक्षरखण्डो **जयन्तः** । निःसारुतालेन द्वादशाक्षरखण्डः **शेखरः** । प्रतिमण्ठतालेन त्रयोदशाक्षरखण्ड **उत्साहः** । हयलीलतालेन चतुर्दशाक्षरखण्डो **मधुरः** । **क्रीडातालेन** पञ्चदशाक्षरखण्डो **निर्मलः** । **लघुशेखरतालेन** षोडशाक्षरखण्डः **कुन्तलः** । **झम्पातालेन** सप्तदशाक्षरखण्डः **कामलः** । निःसारुतालेनाष्टादशाक्षरखण्डः **चारः** । **एकताल्या** एकोनविंशत्यक्षरखण्डो **नन्दनः** । प्रतिमण्ठतालेन विंशत्यक्षरखण्डश्चन्द्रशेखरः । **प्रतिमण्ठेन** तालेनैकविंशत्यक्षरखण्डः **कामोदः** । द्वितीय-

तालेन द्वाविंशत्यक्षरखण्डो विजयः। आदितालेन त्रयोविंशत्यक्षरखण्डः कंदर्पः। क्रीडातालेन चतुर्विंशत्यक्षरखण्डो जयमङ्गलः। एकताल्या पञ्चविंशत्यक्षरखण्डस्तिलकः। प्रतिमण्ठेन तालेन षड्विंशत्यक्षरखण्डो ललित इति। अयं वर्णनियमः कस्मिन् खण्डे कर्तव्य इत्यपेक्षायां पक्षद्वयमाचष्टे—स्यादिति। क्रमेणैतेषां गाने फलमाह—यथोक्तानिति; यथोक्तलक्षणलक्षितान्। मण्ठलक्षणमाह—द्वियतीति। उद्ग्राहखण्डं यतिद्वयसंयुक्तम्, एकयतिकं वा कर्तव्यम्। ततोऽनन्तरं ध्रुवाख्यं खण्डं द्विर्गेयम्। ततः अन्तरो वैकल्पिकः; कर्तव्यो वा, न वा कर्तव्यः। पक्षे तं गीत्वा पुनरपि ध्रुवो गातव्यः। तत आभोगः सकृद्गीयते। ध्रुवे च परिसमाप्तिः। एवंविधो मण्ठतालेन यो गीयते, स मण्ठः। तस्य भेदानाह—जयप्रिय इति। जयप्रियादयः षड् भेदाः। षट्प्रकारो मण्ठताल इति। तेन रूपकं मण्ठाख्यप्रबन्धात् भिद्यते। एतेषां लक्षणमाह—वीर इत्यादिना। जगणरूपेण मण्ठेन गीयमानो जयप्रियः; वीरो रसः। भगणेन मङ्गलः; शृङ्गारो रसः। सगणेन सुन्दरः। रगणेन वल्लभः। नगणेन विरामान्तेन कलापः। द्रुतद्वंद्वेन विरामान्तेन ध्रुवानन्तरं लघुना कमल इति। प्रतिमण्ठादिसाधारणं किंचिदाह—मण्ठवदिति। प्रतिमण्ठलक्षणमाह—तत्रेति। प्रतिमण्ठेन तालेन गीयमानः प्रतिमण्ठः। तस्य अमरादयश्चत्वारो भेदाः। तेषां लक्षणमाह—अमर इति। एकेन गुरुणा गीयमानोऽमरः। विरामान्ते द्रुतद्वयानन्तरं लघुद्वयेन गीयमानस्तारः। विरामान्तेन लघुत्रयेण गीयमानो विचारः। विराममध्येन लघुत्रयेण गीयमानः कुन्द इति। निःसारुकं लक्षयति—बद्ध इति। निःसारुकतालेन विरच्यमानो निःसारुकः। तस्य वैकुन्दादयः षड् भेदाः। तान् लक्षयति—द्रुतद्वंद्वादिति। द्रुतद्वयेन लघुद्वयेन रचितो वैकुन्दः। विरामान्ते द्रुतद्वयेनानन्दः। तल्लोके रूपकमित्युच्यते। लघुगुरुभ्यां कान्तारः। विरामान्ते लघुद्वयेन समरः। जम्बुनाल इत्युच्यते लोके। लघुत्रयद्रुतद्वयेन वाञ्छितः। लघुद्रुतद्वयलघुभिर्विशाल इति। अड्डतालं लक्षयति—अड्डतालेनेति। अड्डतालाख्येन तालेन गीयमानोऽड्डतालः। तस्य निःशङ्कादयः षड् भेदाः। तेषां लक्षणमाह—लगुरुभ्याभित्यादिना। लघुगुरुभ्यामनन्तरं द्रुतद्वयेन गीयमानो निःशङ्कः। लव्वनन्तरं द्रुतद्वयेन शङ्कः। विरामान्तेन द्रुत-

रूपकप्रबन्धाः

**गुणान्वितं दोषहीनं नवं रूपकमुत्तमम् ॥ ३६१ ॥**
**रागेण धातुमातुभ्यां तथा काललयौडुवैः ।**
**नूतनै रूपकं नूत्नं रागः स्थायान्तरैर्नवः ३६२ ॥**

द्वयानन्तरं **शीलः**। द्रुतद्वयानन्तरं लघुगुरुभ्यां **चारः**। द्रुतद्वयानन्तरं गुरुणा **मकरन्दः**। द्रुतद्वयानन्तरं लघुना **विजय** इति। रासकं लक्षयति—**रासक** इति। **रासतालेन** गीयमानो रासकः। तस्य विनोदादयश्चत्वारो भेदाः। तेषां लक्षणमाह—**आलापान्ते**त्यादिना। ध्रुवपदस्यान्ते आलापो विरच्यते चेत्, **विनोदः**। ध्रुवस्य मध्य आलापश्चेत्, तदा **वरदः**। खण्डद्वययुक्तस्योद्ग्राहस्याद्यं खण्डमालापनिर्मितं चेत्, तदा **नन्दः**। ध्रुवस्यादावालापश्चेत्, तदा **कम्बुज** इति। सर्वेष्वपि रासकेषूद्ग्राहो द्विखण्डः कर्तव्यः। एकतालीं लक्षयति—**एकतालीति**। एकतालीनाम्ना **तालेन** विरच्यमाना **एकताली**। सा भेदत्रयवती—रमा, चन्द्रिका, विपुला चेति। तासां लक्षणमाह—**सकृदिति**। यस्यां यतिद्वयोक्त उद्ग्राहः सकृत् गीयते, ततोऽनन्तरमक्षररचितोऽन्तरः, सा **रमा**। यस्यां द्विखण्ड उद्ग्राहः, अन्तरश्चालापः क्रियते, सा **चन्द्रिका**। यस्यां तूद्ग्राहात् पूर्वमालापः क्रियते, सा **विपुलेति**। अत्राक्षरवर्जिता गमकालप्तिरेवालापः; स एव प्रयोग इत्युच्यते ॥ ३१४–३६१ ॥

(क०) अथ रूपकस्योत्तमाद्यवान्तरभेदान् दर्शयिष्यन्नादावुत्तमं लक्षयति—**गुणान्वितमित्यादि**। गुणाः व्यक्त्यादयो वक्ष्यमाणा दश गीतगुणाः; तैरन्वितम्। **दोषहीनमिति**। दुष्टादयो वक्ष्यमाणा दश गीतदोषाः; तैर्हीनं **यन्नवं रूपकं** तत् **उत्तममित्युच्यते**। रूपकस्य नवत्वे निमित्तं दर्शयति—**रागेणेत्यादिना**। **काललयौडुवैरिति**। कालश्च लयश्चौडुवं चेति द्वंद्वः। औडुवशब्देनात्र रचनाविशेष उच्यते। नूतनरागादिनिर्मितत्वाद्रूपकं नवं भवतीत्यर्थः। रञ्जनादिधर्मयोगे सिद्धरूपाणां रागादीनां नूतनत्वं कथमित्याकाङ्क्षा-

**धातू रागांशभेदेन मातोस्तु नवता भवेत् ।**
**प्रतिपाद्यविशेषेण रसालंकारभेदतः ॥ ३६३ ॥**
**लयग्रहविशेषेण तालानां नवता मता ।**
**तालविश्रामतोऽन्येन[1] विश्रामेण लयो नवः ॥ ३६४ ॥**
**छन्दोगणग्रहन्यासप्रबन्धावयवैर्नवैः ।**
**औडुवापरपर्याया रचना नवतां व्रजेत् ॥ ३६५ ॥**

यामाह—**रागः स्थायान्तरैरित्यादि** । स्थाया रागस्यावयवाः । अन्ये स्थायाः स्थायान्तराणि । तैः रागो नवो भवति । पूर्वैः कृतरूपकगत-रागापेक्षयेदानीं क्रियमाणे रूपके स्थायान्तरैर्यथा रागो नवो भवति तथा कर्तव्यमित्यर्थः । **रागांशभेदेने**ति । रागांशशब्देन 'रागान्तरस्यावयवो रागेंऽशः स च सप्तधा' इति पूर्वोक्ताः स्थायभेदका रागावयवविशेषा उच्यन्ते । तद्भेदेन पूर्वोक्तरीत्या **धातुर्नवः** कर्तव्य इत्यर्थः । मातोर्नवत्वे निमित्तद्वयं दर्शयति—**प्रतिपाद्यविशेषेण रसालंकारभेदत** इति । प्रतिपाद्यं नाम वस्तु; वाक्यार्थ इत्यर्थः; तद्भेदेन । रसाः शृङ्गारादयः; अलंकारा अनुप्रासोपमादयः; तेषां भेदेन च मातुर्नवः कर्तव्य इत्यर्थः । तालानां नवत्वे निमित्तमाह—**लयग्रहे**ति । लया द्रुतमध्यविलम्बिताः; ग्रहाः समातीतानागताः; तेषां विशेषेण । **तालानां नवते**ति । पूर्वगीतगतात्तालाद्भिन्नलयग्रहस्तालः कर्तव्य इत्यर्थः । लयस्य नवत्वे हेतुमाह—**तालविश्रामत** इति । तालस्यावयविनो विश्रामादन्येन **विश्रा-मेणा**वयवविश्रामेण विपर्ययेण वा **लयो नवो** भवति । औडुवनवत्वे हेतुमाह—**छन्दोगणे**ति । छन्दःप्रभृतीनि प्रागुक्तरूपाणि । **औडुवापरपर्याये**ति । औडुवमित्यपरः पर्यायो यस्याः सा । एवंविधां रचनां कुर्यादित्यर्थः ।

[1] तुल्येनेति सुधाकरपाठः ।

रूपकं त्रिविधं ज्ञेयं परिवृत्तं पदान्तरम् ।
भञ्जनीसंश्रितं चेति शार्ङ्गदेवेन कीर्तितम् ॥ ३६६ ॥
खल्लोत्तारानुसारौ तु रूपकेष्वधमौ मतौ ।

परिवृत्तरूपकम्

रूपकं पूर्वसंसिद्धं स्वस्थानेन नवेन यत् ॥ ३६७ ॥
यद्वा रागेण तालेन कृतं तत् परिवृत्तकम् ।
यत्र स्थायिनि यत्स्थानं रूपकं रचितं पुरा ॥ ३६८ ॥
तत् स्वस्थानं तदन्यत्त्वं [1]स्थाय्यन्यपरिवर्तनम् ।
परिवृत्तं रागतालपरिवर्तभवं स्फुटम् ॥ ३६९ ॥

इति परिवृत्तरूपकम् ।

पदान्तररूपकम्

तस्मिन्नेव रसे रागे ताले च रचितं भवेत् ।
मातुस्थायविचित्रत्वाद् गुणोदारं पदान्तरम् ॥ ३७० ॥

इति पदान्तररूपकम् ।

भञ्जनीसंश्रितरूपकम्

केनापि रूपकं गीतं निजादन्येन धातुना ।
येन तस्यान्यधातुत्वाद्भञ्जनीसंश्रितं मतम् ॥ ३७१ ॥

इति भञ्जनीसंश्रितरूपकम् ।

अथ मध्यमरूपकभेदानाह—रूपकं त्रिविधमित्यादि । खल्लोत्तारोऽनुसारश्चेति

[1] स्थ.य्यैवेति आनन्दाश्रममुद्रितकोशपाठः। स्थाय्यन्येति पाठो व्याख्यानुसारेणोहितः।

खल्लोत्ताररूपकम्

प्राग्रूपकगता स्थायाः स्थानान्तरगता यदि ।
मात्वन्तरेण रच्यन्ते खल्लोत्तारस्तदा भवेत् ॥ ३७२ ॥

इति खल्लोत्तारस्रूपकम् ।

अनुसाररूपकम्

रागे ताले च तत्रैव किंचिद्धातुविलक्षणः ।
मात्वन्तरेणानुसारो गुणोत्कर्षविवर्जितः ॥ ३७३ ॥

इत्यनुसाररूपकम् ।

इति रूपकप्रबन्धाः ।

गीतगुणाः

व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलंकृतम् ।
समं सुरक्तं श्लक्ष्णं च विकृष्टं मधुरं तथा ॥ ३७४ ॥
दशैते स्युर्गुणा गीते तत्र व्यक्तं स्फुटैः स्वरैः ।
प्रकृतिप्रत्ययैश्चोक्तं छन्दोरागपदैः स्वरैः ॥ ३७५ ॥
पूर्णं पूर्णाङ्गगमकं प्रसन्नं प्रकटार्थकम् ।
सुकुमारं कण्ठभवं त्रिस्थानोत्थमलंकृतम् ॥ ३७६ ॥
समवर्णलयस्थानं सममित्यभिधीयते ।
सुरक्तं वल्लकीवंशकण्ठध्वन्येकतायुतम् ॥ ३७७ ॥
नीचोच्चद्रुतमध्यादौ श्लक्ष्णत्वे श्लक्ष्णमुच्यते ।
उच्चैरुच्चारणादुक्तं विकृष्टं भरतादिभिः ॥ ३७८ ॥
मधुरं धुर्यलावण्यपूर्णं जनमनोहरम् ।

इति गीतगुणाः ।

गीतदोषाः

**दुष्टं लोकेन शास्त्रेण [1]श्रुतिकालविरोधि च ॥ ३७९ ॥**
**पुनरुक्तं कलाबाह्यं गतक्रममपार्थकम् ।**
**ग्राम्यं संदिग्धमित्येवं दशधा गीतदुष्टता ॥ ३८० ॥**

इति गीतदोषाः ।

इति श्रीमदनवद्यविद्याविनोदश्रीकरणाधिपतिश्रीसोढल-
देवनन्दननिःशङ्कश्रीशार्ङ्गदेवविरचिते संगीत-
**रत्नाकरे प्रबन्धाध्यायश्चतुर्थः**

अधमरूपकभेदौ । परिवृत्तादीनां लक्षणानि गुणदोषाणां च लक्षणानि स्पष्टार्थानि ॥ ३६१–३८० ॥

एवं प्रबन्धसामान्यविशेषाश्रितलक्षणम् ।
चतुरः कल्लिनाथार्यः प्रत्येकं प्रत्यपादयत् ॥

**इति श्रीमदभिनवभरताचार्यरायबय(वाग्गेय)कारतोडरमल्लश्रीमल्लक्ष्मणाचार्य-**
**नन्दनचतुरकल्लिनाथविरचिते संगीतरत्नाकरकलानिधौ**
**चतुर्थः प्रबन्धाध्यायः**

(सं०) पञ्चविधरूपकं कथयितुमाह—**गुणान्वितमिति** । वक्ष्यमाणगुणान्वितं दोषहीनं नवं रूपकपञ्चकमुत्तमं ज्ञातव्यम् । नवेन रागेण धातुमात्वादिभिश्च नवैः रूपकस्य नूतनत्वम् । तेषां नवत्वमाह—**रागांशेति** । रागांशभेदेन धातुर्नवो भवति । प्रतिपाद्यभेदेन रसालंकारभेदेन मातुर्नवो भवति । लयग्रहभेदेन तालो नवः । तालविश्रामस्य तुल्येन समेन विश्रामेण लयो नवः । छन्दआदिभिर्नवैः रचना नवा भवति । उत्तमरूपकस्य त्रैविध्यमाह—**रूपकमिति** ।

[1] कालश्रुतीति सुधाकरपाठः ।

अधमरूपकस्य द्वैविध्यमाह—**खल्लोत्तारेति**। पञ्चानां लक्षणमाह—**रूपकमिति**। पूर्वसिद्धं नवेन स्वस्थानकेन रागेण तालेन वा यत् क्रियते तत् परिवृत्तकम्। [1]यत्र रूपके स्थायिनि स्वरे स्वस्थानं पूर्वं तस्मिन्नेव स्थायिनि रागतालपरिवर्तेन स्वस्थानवृत्तिर्ज्ञातव्या। पदान्तरं लक्षयति—**तस्मिन्निति**। भञ्जनीसंश्रितं लक्षयति—**केनापीति**। खल्लोत्तारं लक्षयति—**प्रागिति**। रूपकान्तरगताः स्थाया मात्वन्तरे निवेश्यन्ते चेत्, तदा **खल्लोत्तारः**। स एव किंचिद्धातुविलक्षणश्चेत्, **अनुसारः**। गीतगुणान् कथयति—**व्यक्तमिति**। व्यक्तादयो दश गुणा भवन्ति। तेषां लक्षणं कथयति—**तत्रेति**। सुगमम्। गीतदोषानाह—**दुष्टमिति**। **लोकेन शास्त्रेण** च दुष्टत्वम्। कालविरोधः; निषिद्धकाले गानम्। श्रुतिविरोधः; हीनश्रुतित्वम्॥ ३६१–३८०॥

**इति श्रीमदन्ध्रमण्डलाधीश्वरप्रतिगण्डभैरवश्रीअनपोतनरेन्द्रनन्दनभुजबलभीमश्रीसिंहभूपालविरचितायां संगीतरत्नाकरटीकायां संगीतसुधाकराख्यायां प्रबन्धाध्यायः समाप्तः**

---

[1] इदं च वाक्यमेवमेव मातृकायां दृश्यते। परं तु शोधनीयम्; यथा—'यस्मिन् स्थायिनि स्वरे यत्स्थानकं रूपकं पूर्वं कृतं तत् स्थानमेव स्वस्थानम्। तदन्यत्त्वं नाम पूर्वस्मादन्यस्य स्थायिनः स्वरस्य परिवर्तनमेव। तस्मिन्नेव स्थायिनि स्वरे रागतालपरिवृत्तिर्ज्ञातव्या' इति।

# श्लोकार्धानामनुक्रमणिका

46

47

48

II

# उदाहृतवाक्यानामनुक्रमः

सांकेतिकाक्षराणि—

| | |
|---|---|
| अष्टा. | अष्टाध्यायी |
| औमा. | औमापतम् |
| कला. | कलानिधिः (संगीतरत्नाकरव्याख्या) |
| का. प्र. | काव्यप्रकाशः |
| द. रू. | दशरूपकम् |
| ध्वन्या. | ध्वन्यालोकः |
| नाट्य. | नाट्यशास्त्रम् |
| ना. लि. | नामलिङ्गानुशासनम् |
| पद. | पदमञ्जरी |
| पि. छ. | पिङ्गलच्छन्दः |
| प्रा. पि. छ. | प्राकृतपिङ्गलच्छन्दः |
| प्र. रु. | प्रतापरुद्रीयम् |
| बृ. दे. | बृहद्देशी |
| वृ. र. | वृत्तरत्नाकरः |
| सं. र. | संगीतरत्नाकरः |
| सं. स. | संगीतसमयसारः |
| हला. | हलायुधीयपिङ्गलच्छन्दोव्याख्या |

| | पृ. | आकरः |
|---|---|---|
| अकर्तरि च कारके | ३ | अष्टा. ३-३-१९ |
| अचेतनेषु चैतन्यं | १९० | पद. ४-१-३ |
| अजस्रं सर्वभावानां | ,, | ,, ,, |
| अतः परं प्रवक्ष्यामि | १८ | बृ. दे. १४१ |
| अतः संभूय शुद्धास्ते | १३३ | औमा. १६ |
| अत्यर्थमिष्टं देवानां | २०८ | नाट्य. २८-९ |
| अत्यर्थसुकुमारार्थ | २३१ | प्र. रु. २-१५ |
| अत्युद्धतार्थसंदर्भा | २३१ | ,, ,, २-१५ |
| अत्रान्यैरधिकावुक्तौ | ३०७ | सं. र. ६-१०७७ |
| अथोदिता हि पादे | २९७ | नाट्य. ३२-३२१ |
| अनपेक्ष्यान्यजातीर्ये | २४ | बृ. दे. ८५ |
| अनुक्तमन्यतो ग्राह्यम् | ३१५ | |
| अनुतारात्परं श्रुत्या | १५६ | सं. स. १३ |
| अनुयातीव सोऽन्येषां | १५० | पद. ४-१-३ |
| अनौचित्यादृते नान्यत् | १५२ | ध्वन्या. ३-१४ |
| अन्तरेण यदभ्यासं | १६८ | सं. स. २ |
| अन्यतरोक्तावुभयग्रहः | २० | |
| अन्यूनाधिकता तज्ज्ञैः | १८१ | सं. स. १२ |
| अन्येषु च प्रबन्धेषु | २११ | ,, ,, २४ |
| अभ्यवस्थानकं गीतं | २०९ | ,, ,, |
| अम्बाहेरी टक्कभाषा | १३५ | कला. १३५ |
| अर्थे सत्यर्थभिन्नानां | ३१४ | का. प्र. ९-८३ |
| अल्पत्वं च बहुत्वं च | २५, ३२ | बृ. दे. ८९. १०३ |
| अल्पशेषा पभूयिष्ठा | १४६ | कला. १४६ |
| अविश्रामेण त्रिस्थाना | ६ | बृ. दे. ९२ |
| अश्राव्यं लक्षणं त्यक्त्वा | १५३ | सं. स. ८३ |
| अश्वकर्णादिवद्रूढः | २, ३ | बृ. दे. ८२ |
| अश्वललितं न्जौ भ्जौ | २८१ | पि. छ. ७-२६ |

| | पृ. | आकरः |
|---|---|---|
| गपाभ्यां बहुला पूर्णा | १४२ | कला. १४२ |
| गपाल्पः सग्रहो मान्तः | १४५ | ,, १४५ |
| गमके च पदे जाड्यं | १५३ | सं. स. ८२ |
| गमयोर्निधयोर्युक्ता | १३३ | कला. १३३ |
| गर्भे साधारितश्चैव | २०, ३२ | बृ. दे. ८७ |
| गांशा निदुर्बला धान्ता | १४० | कला. १४० |
| गांशा सान्ता पग्रहा च | १४६ | ,, १४६ |
| गात्रदुःखकारि कर्म | ३०० | हला. ७-२३ |
| गान्धर्वमिति तज्ज्ञेयं | २०८ | नाट्य. २८-८ |
| गान्धारगतिका प्रोक्ता | १४६ | कला. १४६ |
| गान्धारग्रहणन्यासा | १४५ | ,, १४५ |
| गान्धारग्रहसंयुक्तः | १४३ | ,, १४३ |
| गान्धारपञ्चमीजातः | १४४ | ,, १४४ |
| गान्धारपञ्चमीजातेः | १४३ | ,, १४३ |
| गान्धारपञ्चमे भाषा | १३९ | ,, १३९ |
| गान्धारप्रबला षड्ज | ,, | ,, ,, |
| गान्धारवल्ली भाषा स्यात् | १४० | ,, १४० |
| गान्धारांशग्रहन्यासः | १४३ | ,, १४३ |
| गान्धारांशा मध्यमान्ता | १४१ | ,, १४१ |
| गान्धारी करुणे सान्ता | १३२ | ,, १३२ |
| गान्धारीरक्तगान्धार्योः | १४३ | ,, १४३ |
| गान्धारो द्विश्रुतिश्चैव | २६ | बृ. दे. ९१ |
| गापन्यासा निसरिध | १३४ | कला. १३४ |
| गापन्यासा सग्रहान्ता | १३८ | ,, १३८ |
| गीतं पञ्चविधं यत्तत् | ३३ | बृ. दे. १०४ |
| गीतं हास्यरसोदारं | २०९ | सं. स. |
| गीतज्ञैः कथिताः सर्वे | १५, १८ | बृ. दे. |
| गीतमारभटीवृत्त्या | २०९ | सं. स. |

50

| | प्ृ. | आकरः |
|---|---|---|
| पेशलं बहुभङ्गीति | १६८ | सं. स. २ |
| पोता प्रोक्ता मतङ्गेन | १४२ | कला. १४२ |
| पौराली सग्रहांशान्ता | १३९ | ,, १३९ |
| प्रकल्पिता यथा शास्त्रे | १८५ | पद. ४-१-३ |
| प्रज्ञां नवनवोन्मेष | १५० | रुद्रः |
| प्रतिबिम्बकधर्मेण | १९० | पद. ४-१-३ |
| प्रत्येकं लक्षणं चैषां | १८ | बृ. दे. |
| प्रथमा मागधी ज्ञेया | ४ | नाट्य. २९-४८ |
| प्रथमा शुद्धगोतिः स्यात् | ४ | बृ. दे. ८२ |
| प्रबन्धेषु ध्रुवत्वेन | २११ | सं. स. २४ |
| प्रयुञ्जतेऽस्मिन् प्राचीनाः | १४७ | कला. १४७ |
| प्रयोगबहुलं रूक्षं | २०९ | सं. स. |
| प्रयोगे मसृणैः सूक्ष्मैः | ७ | बृ. दे. ८३ |
| प्रवीणत्वेन यो गायेत् | १५८ | सं. स. ८५ |
| प्रवृत्तिधर्मतद्वारा | १९० | पद. ४-१-३ |
| प्रवृत्तिमन्तः सर्वेऽर्थाः | ,, | ,, ,, |
| प्रवृत्तेरपि विद्यन्ते | ,, | ,, ,, |
| प्रवेशाक्षेपनिष्काम | ३३ | बृ. दे. १०४ |
| प्रसिद्धौचित्यबन्धस्तु | १५२ | ध्वन्या. ३-१४ |
| प्रहृष्टे विनियोक्तव्या | १३५ | कला. १३५ |
| प्रेमोद्दीप्तपदप्रायं | २०९ | सं. स. |
| प्रोक्तो मेलापकस्तज्ज्ञैः | २१० | ,, २४ |
| बन्धपारुष्यरहिता | २३२ | प्र. रु. २-२७ |
| बहुली निधसैः पूर्णा | १४६ | कला. १४६ |
| बाहुल्यात्तारसंस्पर्शी | १६० | सं. स. २ |
| बाहुल्यान्मन्द्रसंस्पर्शात् | १५९ | ,, ,, |
| बिरुशब्दो विरुदार्थः | २११ | ,, २५ |
| बुद्धिस्तात्कालिकी प्रोक्ता | १५० | रुद्रः |

| | पृ. | आकरः |
|---|---|---|
| विपरीतपदैर्युक्तं | २०९ | सं. स. |
| विभावनी विभाषा स्यात् | १४२ | कला. १४२ |
| विभाषा त्यक्तगान्धार | १३९ | ,, १३९ |
| विभाषा पञ्चमत्यक्ता | १४२ | ,, १४२ |
| विभाषा पार्वती पूर्णा | १४१ | ,, १४१ |
| विभाषा भिन्नषड्जस्य | ,, | ,, ,, |
| विभाषा स्यात्तु कालिन्दी | ,, | ,, ,, |
| विलगन्ति स विज्ञेयः | १५८ | सं. स. ८५ |
| विवादी चानुवादी च | २५ | बृ. दे. ८८ |
| विवाहाद्युत्सवे गेयं | २०९ | सं. स. |
| विशिखैरिव तीक्ष्ण | २५७ | हला. ४-३२ |
| वृत्तमौक्तिकवत्काच | १७८ | सं. स. ९ |
| वेसरा मुखयोः कार्या | ३२ | बृ. दे. १०४ |
| वेसरी टक्कभाषा स्यात् | १३५ | कला. १३५ |
| व्यक्तस्वरसमायुक्तं | २०९ | सं. स. |
| शकाद्या वलिता मांशा | १४३ | कला. १४३ |
| शक्तिर्निपुणतालोक | १५२ | का. प्र. १-३ |
| शरीरेण सहोत्पन्नं | ,, | सं. स. |
| शारीरं पेशलं ज्ञेयं | १६८ | ,, २ |
| शुद्धं तु शिवरूपेण | १३३ | औमा. २० |
| शुद्धपञ्चमभाषा स्याद् | १३६ | कला. १३६ |
| शुद्धानां विनियोगोऽयं | ३२ | बृ. दे. ८७ |
| शुद्धा प्रहर्षे नियुक्ता | १३९ | कला. १३९ |
| शुद्धा भिन्नाश्च गौडाश्च | २६ | बृ. दे. ९८ |
| शुद्धे छायालगे चैव | १५८ | सं. स. ८४ |
| शुद्धे वा सालगे सम्यक् | १५६ | ,, ,, |
| शुभवाक्ययुतं गीतं | २०९ | ,, |
| शेषा गाथास्त्रिभिः षड्भिः | ३१६ | बृ. र. १-१८ |

---

## III

# उदाहृतानां ग्रन्थानां ग्रन्थकर्तॄणां च नामानि



---

**IV**

# विशेषपदानुक्रमणी

